क्तो लयः। अक्षरस्य 'तद्धाम परमं मम' इति वाक्योक्तभगवद्धामत्वज्ञानपूर्वकं नित्यभगवल्लोकत्वेन भगवदभिन्नत्वेन दहराद्युक्तरीत्योपासने यथाधिकारं सालोक्यादिचतुष्टयप्राप्तिः। आदित्याद्युपासनानामङ्गोपासनात्वादर्चिरादिक्रमेण गत्याऽमानवेन पुरुषेण भगवल्लोकप्राप्तिरैश्वर्यादिभोगश्च। उपासनायां मर्यादाभक्तिसाहित्ये वैकुण्ठादिलोकेषु भगवत्सेवकत्वमधिकम्। तदा भगवदनुभवः। तत्रापि भक्तेरुत्कटत्वे तु भगवच्चरणे कौस्तुभादौ वा प्रवेशेन भगवत्सायुज्यम्। अनुग्रहविशेषेण पुष्टिभक्तौ तु 'भक्त्या मामभिजानाति' इत्युक्तरीत्या स्वस्मिन्प्रवेश्य भूमविद्योक्तरीत्या पुनः पृथगाविर्भाव्य भजनानन्दानुभावने 'सोश्नुत' इति श्रुत्युक्तरीतिकं भोगं कारयतीति'।

आचार्यकृपयैवायमध्यायार्थः प्रकाशितः। अतो विशेषजिज्ञासा प्रकाशेन प्रपूर्यताम् ॥ १ ॥
फलमालामलब्ध्वास्य रचितां पुरुषोत्तमैः। कृता गोपेश्वरेणेयं नातो व्यर्थः परिश्रमः ॥ २ ॥

इति श्रीविद्वन्मण्डनगोकुलोत्सवात्मजगोपेश्वरविरचितायामधिकरणमालायां चतुर्थाध्यायस्य चतुर्थः पादः ॥

---